य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह। सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते। २३
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना। अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे। २४
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते। तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः। २५
यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम्। क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ। २६
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति। २७
समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम्। न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्। २८
प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः। यः पश्यति तथात्मानमकर्तारं स पश्यति। २९
यदा भूतपृथग्भावमेकस्थमनुपश्यति। तत एव च विस्तारं ब्रह्म सम्पद्यते तदा। ३०
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते। ३१
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते। ३२
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत। ३३
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा। भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्। ३४

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः॥ १३॥

# अथ चतुर्दशोऽध्यायः

*श्रीभगवानुवाच*

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्। यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः। १**
**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च। २**
**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्। सम्भवः सर्वभूतानां ततो भवति भारत। ३**
**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः। तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता। ४**
**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्। ५**
**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्। सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ। ६**
**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्। तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्। ७**
**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्। प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत। ८**
**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत। ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत। ९**
**रजस्तमश्चाभिभूय सत्त्वं भवति भारत। रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा। १०**
**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते। ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत। ११**
**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा। रजस्येतानि जायन्ते विवृद्धे भरतर्षभ। १२**

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन । १३
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् । तदोत्तमविदां लोकानमलान्प्रतिपद्यते । १४
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते । तथा प्रलीनस्तमसि मूढयोनिषु जायते । १५
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् । रजसस्तु फलं दुःखमज्ञानं तमसः फलम् । १६
सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च । १७
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः । १८
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति । १९
गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् । जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते । २०

*अर्जुन उवाच*

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो । किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते । २१

*श्रीभगवानुवाच*

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति । २२
उदासीनवदासीनो गुणैर्यो न विचाल्यते । गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते । २३
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः । तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः । २४
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्वारम्भपरित्यागी गुणातीतः स उच्यते । २५
मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते । २६
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च । २७

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

# अथ पञ्चदशोऽध्यायः

*श्रीभगवानुवाच*

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् । १

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके । २
न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा । ३
ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी । ४

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्। ५
न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम। ६
ममैवांशो जीवलोके जीवभूतः सनातनः। मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति। ७
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्। ८
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च। अधिष्ठाय मनश्चायं विषयानुपसेवते। ९
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्। विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः। १०
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्। यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः। ११
यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्। १२
गामाविश्य च भूतानि धारयाम्यहमोजसा। पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः। १३
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्। १४
सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्। १५
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। १६
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। १७
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। १८
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारत। १९
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ। एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत। २०

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः॥ १५॥

# अथ षोडशोऽध्यायः

*श्रीभगवानुवाच*

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्। १**
**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्। २**
**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति सम्पदं दैवीमभिजातस्य भारत। ३**
**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च। अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्। ४**
**दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता। मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव। ५**
**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च। दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु। ६**

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः। न शौचं नापि चाचारो न सत्यं तेषु विद्यते। ७
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसम्भूतं किमन्यत्कामहैतुकम्। ८
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः। प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः। ९
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः। मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः। १०
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः। कामोपभोगपरमा एतावदिति निश्चिताः। ११
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः। ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्। १२
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्धनम्। १३
असौ मया हतः शत्रुर्हनिष्ये चापरानपि। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी। १४
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया। यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः। १५
अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ। १६
आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः। यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्। १७
अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः। मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। १८
तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। १९
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्। २०
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्। २१
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः। आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्। २२
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम्। २३
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि। २४

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः॥ १६॥

# अथ सप्तदशोऽध्यायः

*अर्जुन उवाच*

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः। तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः। १

*श्रीभगवानुवाच*

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा। सात्त्विकी राजसी चैव तामसी चेति तां शृणु। २
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत। श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः। ३
यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः। प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः। ४
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः। दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः। ५

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः। मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान्। ६
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः। यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु। ७
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः। ८
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदाः। ९
यातयामं गतरसं पूति पर्युषितं च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्। १०
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः। ११
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्। इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्। १२
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्। श्रद्धाविरहितं यज्ञं तामसं परिचक्षते। १३
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते। १४
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते। १५
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत्तपो मानसमुच्यते। १६
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः। अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते। १७
सत्कारमानपूजार्थं तपो दम्भेन चैव यत्। क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्। १८
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः। परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्। १९
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे। देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्। २०
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः। दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्। २१
अदेशकाले यद्दानमपात्रेभ्य दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम्। २२
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा। २३
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्। २४
तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः। दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः। २५
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते। प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते। २६
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते। कर्म चैव तदर्थीयं सदित्येवाभिधीयते। २७
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह। २८

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः॥ १७॥

# अथाष्टादशोऽध्यायः

*अर्जुन उवाच*

सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् । त्यागस्य च हृषीकेश पृथक्केशिनिषूदन। १

*श्रीभगवानुवाच*

काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः। २
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपःकर्म न त्याज्यमिति चापरे। ३
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम । त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः। ४
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्। ५
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्। ६
नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः। ७
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्। ८
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः। ९
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः। १०
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते। ११
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्। १२
पञ्चैतानि महाबाहो कारणानि निबोध मे । साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्। १३
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्। १४
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः। १५
तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः। १६
यस्य नाहङ्कृतो भावो बुद्धिर्यस्य नलिप्यते । हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते। १७
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना । करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः। १८
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः । प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि। १९
सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्। २०
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्। २१
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम्। २२
नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते। २३
यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम्। २४
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म यत्तत्तामसमुच्यते। २५
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते। २६

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः। २७
अयुक्तः प्राकृतः स्तब्धःशठोऽनैष्कृतिकोऽलसः। विषादी दीर्घसूत्री च कर्ता तामस उच्यते। २८
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु। प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय। २९
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी। ३०
यया धर्ममधर्मं च कार्यं चाकार्यमेव च। अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी। ३१
अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी। ३२
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी। ३३
यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन। प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी। ३४
यया स्वप्नं भयं शोकं विषादं मदमेव च। न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी। ३५
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ। अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति। ३६
यत्तदग्रे विषमिव परिणामेऽमृतोपमम्। तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्। ३७
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतम्। ३८
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः। निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्। ३९
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः। ४०
ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप। कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः। ४१
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्। ४२
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्। ४३
कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्। परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्। ४४
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु। ४५
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः। ४६
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्। स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्। ४७
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्। सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः। ४८
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः। नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति। ४९
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे। समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा। ५०
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च। शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च। ५१
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः। ५२
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते। ५३
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। ५४
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्। ५५
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्। ५६

चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः। बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव। ५७
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि। अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि। ५८
यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति। ५९
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा। कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्। ६०
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया। ६१
तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्। ६२
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया। विमृश्यैतदशेषेण यथेच्छसि तथा कुरु। ६३
सर्वगुह्यतमं भूयः शृणु मे परमं वचः। इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्। ६४
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे। ६५
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः। ६६
इदं ते नातपस्काय नाभक्ताय कदाचन। न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति। ६७
य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति। भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः। ६८
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता न च मे तस्मादन्यः प्रियतरो भुवि। ६९
अध्येष्यते च य इमं धर्म्यं संवादमावयोः। ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः। ७०
श्रद्धावाननसूयश्च शृणुयादपि यो नरः। सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम्। ७१
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा। कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय। ७२

*अर्जुन उवाच*

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत। स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव। ७३

*सञ्जय उवाच*

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः। संवादमिममश्रौषमद्भुतं रोमहर्षणम्। ७४
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम्। योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम्। ७५
राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम्। केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः। ७६
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः। विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः। ७७
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः। तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम। ७८

ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
मोक्षसन्न्यासयोगो नामाष्टादशोऽध्यायः॥ १८॥

## आरती

जय भगवद्गीते, जय भगवद्गीते।
हरि-हिय-कमल विहारिणि, सुन्दर सुपुनीते॥ जय०
कर्म-सुमर्म-प्रकाशिनि, कामासक्तिहरा।
तत्त्वज्ञान-विकाशिनि विद्या ब्रह्म परा॥ जय०
निश्चल-भक्ति-विधायिनि निर्मल मलहारी।
शरण-रहस्य-प्रदायिनि सब विधि सुखकारी॥ जय०
राग-द्वेष-विदारिणि, कारिणि मोद सदा।
भव-भय-हारिणि, तारिणि, परमानन्दप्रदा॥ जय०
आसुर-भाव-विनाशिनि, नाशिनि तम-रजनी।
दैवी सद्गुणदायिनि, हरि-रसिका सजनी॥ जय०
समता, त्याग सिखावनि, हरि-मुखकी बानी।
सकल शास्त्रकी स्वामिनि, श्रुतियोंकी रानी॥ जय०
दया-सुधा बरसावनि मातु! कृपा कीजै।
हरिपद-प्रेम दान कर अपनो कर लीजै॥ जय०

# १७. श्रीमद्भगवद्गीता-पादानुक्रमणिका

अ


अकर्तारं स पश्यति १३।२९
अकर्मणश्च बोद्धव्यम् ४।१७
अकर्मणि च कर्म यः ४।१८
अकीर्तिकरमर्जुन २।२
अकीर्तिं चापि भूतानि २।३४
अक्लेद्योऽशोष्य
एव च २।२४
अक्षरं ब्रह्म परमम् ८।३
अक्षराणामकारोऽ-
स्मि १०।३३
अक्षरादपि चोत्तमः १५।१८
अग्निर्ज्योतिरहः
शुक्लः ८।२४
अघायुरिन्द्रियारामः ३।१६
अचरं चरमेव च १३।१५
अचलोऽयं सनातनः २।२४
अचिरेणाधिगच्छति ४।३९
अच्छेद्योऽ-
यमदाह्योऽयम् २।२४
अजानता महिमानं
तवेदम् ११।४१
अजो नित्यः शाश्वतोऽयं
पुराणः २।२०
अजोऽपि सन्नव्ययात्मा ४।६
अज्ञश्चाश्रद्दधानश्च ४।४०
अज्ञानं
यदतोऽन्यथा १३।११
अज्ञानं चाभिजातस्य १६।४
अज्ञानं तमसः
फलम् १४।१६
अज्ञानां कर्मसङ्गिनाम् ३।२६
अज्ञानेनावृतं ज्ञानम् ५।१५
अणोरणीयांस-
मनुस्मरेद्यः ८।९
अत ऊर्ध्वं न
संशयः १२।८
अतत्त्वार्थवदल्पं च १८।२२
अतीतो भवति प्रभो १४।२१
अतोऽस्मि लोके
वेदे च १५।१८
अत्यन्तं सुखमश्नुते ६।२८
अत्येति तत्सर्वमिदं
विदित्वा ८।२८
अत्र शूरा महेष्वासाः १।४
अथ केन
प्रयुक्तोऽयम् ३।३६
अथ चित्तं समाधातुम् १२।९
अथ चेत्त्वमहङ्कारात् १८।५८
अथ चेत्त्वमिमं
धर्म्यम् २।३३
अथ चैनं
नित्यजातम् २।२६
अथवा बहुनैतेन १०।४२
अथवा योगिनामेव ६।४२
अथ व्यवस्थितान्
दृष्ट्वा १।२०
अथैतदप्य-
शक्तोऽसि १२।११
अदृष्टपूर्वं हृषितोऽस्मि
दृष्ट्वा ११।४५
अदेशकाले
यद्दानम् १७।२२
अद्भुतं रोमहर्षणम् १८।७४
अद्रोहो नातिमानिता १६।३
अद्वेष्टा सर्व-
भूतानाम् १२।१३
अधर्मं धर्ममिति या १८।३२
अधर्माभिभवात्कृष्ण १।४१
अधर्मोऽभिभवत्युत १।४०
अधश्च मूलान्यनु
सन्ततानि १५।२
अधश्चोर्ध्वं प्रसृतास्तस्य
शाखाः १५।२
अधिदैवं किमुच्यते ८।१
अधिभूतं क्षरो भावः ८।४

अधिभूतं च किं प्रोक्तम् ८।१
अधियज्ञः कथं कोऽत्र ८।२
अधियज्ञोऽहमेवात्र ८।४
अधिष्ठानं तथा कर्ता १८।१४
अधिष्ठाय मनश्चायम् १५।९
अधो गच्छन्ति तामसाः १४।१८
अध्यात्मं कर्म चाखिलम् ७।२९
अध्यात्मज्ञान-नित्यत्वम् १३।११
अध्यात्मनित्या विनिवृत्तकामाः १५।५
अध्यात्मविद्या विद्यानाम् १०।३२
अध्येष्यते च य इमम् १८।७०
अनन्तं विश्वतोमुखम् ११।११
अनन्त देवेश जगन्निवास ११।३७
अनन्तबाहुं शशि-सूर्यनेत्रम् ११।१९
अनन्तविजयं राजा १।१६
अनन्तवीर्यामितविक्रम-स्त्वम् ११।४०
अनन्तश्चास्मि नागानाम् १०।२९
अनन्यचेताः सततम् ८।१४
अनन्याश्चिन्तयन्तो माम् ९।२२
अनन्येनैव योगेन १२।६
अनपेक्षः शुचिर्दक्षः १२।१६
अनवेक्ष्य च पौरुषम् १८।२५
अनहङ्कार एव च १३।८
अनात्मनस्तु शत्रुत्वे ६।६
अनादित्वान्नि-र्गुणत्वात् १३।३१
अनादिमत्परं ब्रह्म १३।१२
अनादिमध्यान्त-मनन्तवीर्यम् ११।१९
अनार्यजुष्टमस्वर्ग्यम् २।२
अनाशिनोऽप्रमेयस्य २।१८
अनाश्रितः कर्मफलम् ६।१
अनिकेतः स्थिरमतिः १२।१९
अनिच्छन्नपि वार्ष्णेय ३।३६
अनित्यमसुखं लोकम् ९।३३
अनिष्टमिष्टं मिश्रं च १८।१२
अनुतिष्ठन्ति मानवाः ३।३१
अनुद्वेगकरं वाक्यम् १७।१५
अनुबन्धं क्षयं हिंसाम् १८।२५
अनेकचित्तविभ्रान्ताः १६।१६
अनेकजन्मसंसिद्धः ६।४५
अनेकदिव्याभरणम् ११।१०
अनेकबाहूदरवक्त्र-नेत्रम् ११।१६
अनेकवक्त्रनयनम् ११।१०
अनेकाद्भुतदर्शनम् ११।१०
अनेन प्रसविष्यध्वम् ३।१०
अनेनैव स्वचक्षुषा ११।८
अन्तकाले च मामेव ८।५
अन्तरं ज्ञानचक्षुषा १३।३४
अन्तवत्तु फलं तेषाम् ७।२३
अन्तवन्त इमे देहाः २।१८
अन्नाद्भवन्ति भूतानि ३।१४
अन्यः प्रियतरो भुवि १८।६९
अन्ययावर्तते पुनः ८।२६
अन्यानि संयाति नवानि देही २।२२
अन्यायेनार्थसञ्चयान् १६।१२
अन्ये च बहवः शूराः १।९
अन्ये त्वेवमजानन्तः १३।२५
अन्ये साङ्ख्येन योगेन १३।२४
अपरं भवतो जन्म ४।४
अपरस्परसम्भूतम् १६।८

अपरे नियताहारा: ४।३०
अपरेयमितस्त्वन्याम् ७।५
अपर्याप्तं तदस्माकम् १।१०
अपश्यद् देव-
देवस्य ११।१३
अपात्रेभ्यश्च दीयते १७।२२
अपाने जुह्वति
प्राणम् ४।२९
अपि चेत्सुदुराचार: ९।३०
अपि चेदसि
पापेभ्य: ४।३६
अपि त्रैलोक्य-
राज्यस्य १।३५
अप्रकाशोऽप्रवृत्तिश्च १४।१३
अप्रतिष्ठो महाबाहो ६।३८
अप्राप्य मां निवर्तन्ते ९।३
अप्राप्य योग-
संसिद्धिम् ६।३७
अफलप्रेप्सुना कर्म १८।२३
अफलाकाङ्क्षि-
भिर्यज्ञ: १७।११
अफलाकाङ्क्षि-
भिर्युक्तै: १७।१७
अभयं सत्त्वसंशुद्धि: १६।१
अभिजातस्य भारत १६।३
अभिजातोऽसि
पाण्डव १६।५
अभितो ब्रह्म
निर्वाणम् ५।२६
अभिसन्धाय तु
फलम् १७।१२
अभ्यासयोगयुक्तेन ८।८
अभ्यासयोगेन तत: १२।९
अभ्यासाद्रमते यत्र १८।३६
अभ्यासेन तु कौन्तेय ६।३५
अभ्यासेऽप्य-
समर्थोऽसि १२।१०
अभ्युत्थानमधर्मस्य ४।७
अमलान्प्रतिपद्यते १४।१४
अमानित्वमदम्भित्वम् १३।७
अमी च त्वां धृतराष्ट्रस्य
पुत्रा: ११।२६
अमी हि त्वां सुरसङ्घा
विशन्ति ११।२१
अमृतं चैव मृत्युश्च ९।१९
अमृतस्याव्ययस्य च १४।२७
अयति: श्रद्धयोपेत: ६।३७
अयथावत्प्रजानाति १८।३१
अयनेषु च सर्वेषु १।११
अयुक्त: कामकारेण ५।१२
अयुक्त: प्राकृत:
स्तब्ध: १८।२८
अरतिर्जनसंसदि १३।१०
अरागद्वेषत: कृतम् १८।२३
अवजानन्ति मां मूढा: ९।११
अवशं प्रकृतेर्वशात् ९।८
अवाच्यवादांश्च बहून् २।३६
अवाप्य भूमावसपत्न-
मृद्धम् २।८
अविकार्योऽयमुच्यते २।२५
अविनाशि तु
तद्विद्धि २।१७
अविभक्तं
विभक्तेषु १८।२०
अविभक्तं च भूतेषु १३।१६
अव्यक्तं व्यक्ति-
मापन्नम् ७।२४
अव्यक्तनिधनान्येव २।२८
अव्यक्तं पर्युपासते १२।३
अव्यक्तादीनि भूतानि २।२८
अव्यक्ताद् व्यक्तय:
सर्वा: ८।१८
अव्यक्तासक्त-
चेतसाम् १२।५
अव्यक्ता हि
गतिर्दु:खम् १२।५
अव्यक्तोऽक्षर इत्युक्त: ८।२१
अव्यक्तोऽयम-
चिन्त्योऽयम् २।२५
अव्यक्तोऽव्यक्तात्-
सनातन: ८।२०
अशस्त्रं शस्त्रपाणय: १।४६
अशान्तस्य कुत:
सुखम् २।६६
अशास्त्रविहितं घोरम् १७।५
अशोच्यान-
न्वशोचस्त्वम् २।११
अश्नन्गच्छन्-
स्वपञ्श्वसन् ५।८
अश्नन्ति दिव्यान्दिवि
देवभोगान् ९।२०
अश्नामि प्रयतात्मन: ९।२६
अश्रद्दधाना: पुरुषा: ९।३

अश्रद्धया हुतं दत्तम् १७।२८
अश्रुपूर्णाकुलेक्षणम् २।१
अश्वत्थमेनं
सुविरूढमूलम् १५।३
अश्वत्थं प्राहुरव्ययम् १५।१
अश्वत्थः सर्व-
वृक्षाणाम् १०।२६
अश्वत्थामा विकर्णश्च १।८
अश्विनौ मरुतस्तथा ११।६
असंयतात्मना योगः ६।३६
असंशयं समग्रं माम् ७।१
असंशयं महाबाहो ६।३५
असक्तं सर्वभृच्चैव १३।१४
असक्तं तेषु कर्मसु ९।९
असक्तबुद्धिः सर्वत्र १८।४९
असक्तः स विशिष्यते ३।७
असक्तिरनभिष्वङ्गः १३।९
असक्तो ह्याचरन्कर्म ३।१९
असङ्गशस्त्रेण दृढेन
छित्त्वा १५।३
असत्कृतमवज्ञातम् १७।२२
असत्यमप्रतिष्ठं ते १६।८
असदित्युच्यते पार्थ १७।२८
असम्मूढः स
मर्त्येषु १०।३
असितो देवलो
व्यासः १०।१३

असौ मया हतः
शत्रुः १६।१४
अस्माकं तु
विशिष्टा ये १।७
अस्मिन् रणसमुद्यमे १।२२
अस्याधिष्ठानमुच्यते ३।४०
अहं वैश्वानरो भूत्वा १५।१४
अहं स च मम प्रियः ७।१७
अहं सर्वस्य प्रभवः १०।८
अहं हि सर्वयज्ञानाम् ९।२४
अहङ्कार इतीयं मे ७।४
अहङ्कारं बलम् दर्पम् १६।१८,
" " १८।५३
अहङ्कारविमूढात्मा ३।२७
अहं कृत्स्नस्य जगतः ७।६
अहं क्रतुरहं यज्ञः ९।१६
अहं त्वा सर्व-
पापेभ्यः १८।६६
अहमग्निरहं हुतम् ९।१६
अहमज्ञानजं तमः १०।११
अहमात्मा गुडाकेश १०।२०
अहमादिर्हि देवानाम् १०।२
अहमादिश्च मध्यं
च १०।२०
अहमेवंविधोऽर्जुन ११।५४
अहमेवाक्षयः कालः १०।३३
अहं बीजप्रदः पिता १४।४

अहर्यद्ब्रह्मणो विदुः ८।१७
अहिंसा क्षान्ति-
रार्जवम् १३।७
अहिंसा सत्यमक्रोधः १६।२
अहिंसा समता तुष्टिः १०।५
अहो बत महत्पापम् १।४५

आ

आकाशं
नोपलिप्यते १३।३२
आख्याहि मे को
भवानुग्ररूपः ११।३१
आगमापा-
यिनोऽनित्याः २।१४
आचरत्यात्मनः
श्रेयः १६।२२
आचार्य महतीं चमूम् १।३
आचार्यमुपसङ्गम्य १।२
आचार्याः पितरः
पुत्राः १।३४
आचार्यान्मातुलान्-
भ्रातॄन् १।२६
आचार्योपासनं
शौचम् १३।७
आढ्योऽभि-
जनवानस्मि १६।१५
आतिष्ठोत्तिष्ठ भारत ४।४२
आत्मतृप्तश्च मानवः ३।१७

आत्मन्येव च सन्तुष्टः ३।१७
आत्मन्येव वशं नयेत् ६।२६
आत्मन्येवात्मना तुष्टः २।५५
आत्मन्येवावतिष्ठते ६।१८
आत्मबुद्धि-प्रसादजम् १८।३७
आत्मवन्तं न कर्माणि ४।४१
आत्मवश्यैर्विधेयात्मा २।६४
आत्मसंयमयोगाग्नौ ४।२७
आत्मसंस्थं मनः कृत्वा ६।२५
आत्मसम्भाविताः स्तब्धाः १६।१७
आत्मानं रहसि स्थितः ६।१०
आत्मानं केवलं तु यः १८।१६
आत्मानं परमेश्वर ११।३
आत्मानं मत्परायणः ९।३४
आत्मैव रिपुरात्मनः ६।५
आत्मैव ह्यात्मनो बन्धुः ६।५
आत्मौपम्येन सर्वत्र ६।३२
आदित्यवर्णं तमसः परस्तात् ८।९
आदित्यानामहं विष्णुः १०।२१
आदिदेवमजं विभुम् १०।१२
आद्यन्तवन्तः कौन्तेय ५।२२
आपूर्यमाणमचल-प्रतिष्ठम् २।७०
आब्रह्मभुवनाल्लोकाः ८।१६
आयुधानामहं वज्रम् १०।२८
आयुः सत्त्वबलारोग्य- १७।८
आरुरुक्षोर्मुनेर्योगम् ६।३
आर्तो जिज्ञासुरर्थार्थी ७।१६
आवृतं ज्ञानमेतेन ३।३९
आवृत्तिं चैव योगिनः ८।२३
आशापाशशतैर्बद्धाः १६।१२
आश्चर्यवच्चैनमन्यः शृणोति २।२९
आश्चर्यवत्पश्यति कश्चिदेनम् २।२९
आश्चर्यवद्वदति तथैव चान्यः २।२९
आश्वासयामास च भीतमेनम् ११।५०
आसुरं पार्थ मे शृणु १६।६
आसुरं भावमाश्रिताः ७।१५
आसुरीं योनि-मापन्नाः १६।२०
आसुरीष्वेव योनिषु १६।१९
आस्थितः स हि युक्तात्मा ७।१८
आस्थिता जनकादयः ३।२०
आस्थितो योग-धारणाम् ८।१२
आहारस्त्वपि सर्वस्य १७।७
आहारा राजसस्येष्टाः १७।९
आहाराः सात्त्विक-प्रियाः १७।८
आहुस्त्वामृषयः सर्वे १०।१३

इ

इच्छाद्वेषसमुत्थेन ७।२७
इच्छा द्वेषः सुखं दुःखम् १३।६
इच्छामि त्वां द्रष्टुमहं तथैव ११।४६
इज्यते भरतश्रेष्ठ १७।१२
इति क्षेत्रं तथा ज्ञानम् १३।१८
इति गुह्यतमं शास्त्रम् १५।२०
इति ते ज्ञान-माख्यातम् १८।६३
इति मत्वा न सज्जते ३।२८
इति मत्वा भजन्ते माम् १०।८
इति मां योऽभिजानाति ४।१४

इत्यज्ञानविमोहिताः १६।१५
इत्यर्जुनं वासुदेव-
स्तथोक्त्वा ११।५०
इत्यहं वासुदेवस्य १८।७४
इदं वक्ष्याम्यशेषतः ७।२
इदं शरीरं कौन्तेय १३।१
इदं ज्ञानमुपाश्रित्य १४।२
इदं तु ते गुह्यतमम् ९।१
इदं ते नातपस्काय १८।६७
इदमद्य मया
लब्धम् १६।१३
इदमस्तीदमपि मे १६।१३
इदमाह महीपते १।२१
इदमुक्तं मयानघ १५।२०
इदानीमस्मि संवृत्तः ११।५१
इन्द्रियस्येन्द्रियस्यार्थे ३।३४
इन्द्रियाग्निषु जुह्वति ४।२६
इन्द्रियाणां हि
चरताम् २।६७
इन्द्रियाणां
मनश्चास्मि १०।२२
इन्द्रियाणि दशैकं च १३।५
इन्द्रियाणि पराण्याहुः ३।४२
इन्द्रियाणि प्रमाथीनि २।६०
इन्द्रियाणि मनो
बुद्धिः ३।४०
इन्द्रियाणीन्द्रियार्थेभ्यः २।५८,
" " २।६८
इन्द्रियाणीन्द्रियार्थेषु ५।९
इन्द्रियार्थान्विमूढात्मा ३।६
इन्द्रियार्थेषु वैराग्यम् १३।८
इन्द्रियेभ्यः परं मनः ३।४२
इमं राजर्षयो विदुः ४।२
इमं विवस्वते योगम् ४।१
इमं प्राप्य भजस्व
माम् ९।३३
इमं प्राप्स्ये
मनोरथम् १६।१३
इमांस्त्वं व्याप्य
तिष्ठसि १०।१६
इषुभिः प्रतियोत्स्यामि २।४
इष्टः स्यामिति
मे मतिः १८।७०
इष्टानिष्टोपपत्तिषु १३।९
इष्टान्भोगान्हि
वो देवाः ३।१२
इष्टोऽसि मे
दृढमिति १८।६४
इहैकस्थं
जगत्कृत्स्नम् ११।७
इहैव तैर्जितः सर्गः ५।१९

ई

ईक्षते योगयुक्तात्मा ६।२९
ईश्वरः सर्वभूतानाम् १८।६१
ईश्वरोऽहमहं भोगी १६।१४
ईहन्ते कामभोगार्थम् १६।१२

उ

उक्त्वा तूष्णीं बभूव ह २।९
उच्चैःश्रवसमश्वानाम् १०।२७
उच्छिष्टमपि
चामेध्यम् १७।१०
उत्क्रामन्तं स्थितं
वापि १५।१०
उत्तमः पुरुष-
स्त्वन्यः १५।१७
उत्तमौजाश्च वीर्यवान् १।६
उत्सन्नकुलधर्माणाम् १।४४
उत्साद्यन्ते
जातिधर्माः १।४३
उत्सीदेयुरिमे लोकाः ३।२४
उदाराः सर्व एवैते ७।१८
उदासीनवदासीनः १४।२३
उदासीनवदासीनम् ९।९
उदासीनो गतव्यथः १२।१६
उद्धरेदात्मनात्मानम् ६।५
उद्भवश्च
भविष्यताम् १०।३४
उन्मिषन्निमिषन्नपि ५।९
उपदेक्ष्यन्ति ते
ज्ञानम् ४।३४
उपद्रष्टानुमन्ता च १३।२२
उपविश्यासने
युञ्ज्याद् ६।१२
उपहन्यामिमाः प्रजाः ३।२४
उपैति शान्तरजसम् ६।२७
उभयोरपि दृष्टोऽन्तः २।१६
उभयोर्विन्दते फलम् ५।४

उभे सुकृतदुष्कृते २।५०
उभौ तौ न विजानीतः २।१९
उवाच पार्थ
पश्यैतान् १।२५
उवाच मधुसूदनः २।१
उषित्वा शाश्वतीः
समाः ६।४१

ऊ

ऊर्ध्वं गच्छन्ति
सत्त्वस्थाः १४।१८
ऊर्ध्वमूलमधःशाखम् १५।१

ऋ

ऋक्साम यजुरेव च ९।१७
ऋतूनां कुसुमाकरः १०।३५
ऋतेऽपि त्वां न
भविष्यन्ति सर्वे ११।३२
ऋषयः क्षीण-
कल्मषाः ५।२५
ऋषिभिर्बहुधा
गीतम् १३।४
ऋषींश्च सर्वानुरगांश्च
दिव्यान् ११।१५

ए

एकं सांख्यं च
योगं च ५।५
एकत्वेन पृथक्त्वेन ९।१५
एकभक्तिर्विशिष्यते ७।१७
एकमप्यास्थितः
सम्यक् ५।४
एकया यात्यनावृत्तिम् ८।२६
एकस्थमनुपश्यति १३।३०
एकांशेन स्थितो
जगत् १०।४२
एकाकी यतचित्तात्मा ६।१०
एकेह कुरुनन्दन २।४१
एकोऽथवाप्यच्युत
तत्समक्षम् ११।४२
एतच्छ्रुत्वा वचनं
केशवस्य ११।३५
एतज्ज्ञानमिति
प्रोक्तम् १३।११
एतत्क्षेत्रं समासेन १३।६
एतद्गुह्यमहं
परम् १८।७५
एतद्धि दुर्लभतरम् ६।४२
एतद्बुद्ध्वा बुद्धि-
मान्स्यात् १५।२०
एतद्योनीनि भूतानि ७।६
एतद्यो वेत्ति तं
प्राहुः १३।१
एतन्मे संशयं कृष्ण ६।३९
एतस्याहं न पश्यामि ६।३३
एतां विभूतिं योगं च १०।७
एतां दृष्टिमवष्टभ्य १६।९
एतान्न हन्तुमिच्छामि १।३५
एतान्यपि तु कर्माणि १८।६
एतावदिति
निश्चिताः १६।११
एतैर्विमुक्तः
कौन्तेय १६।२२
एतैर्विमोहयत्येषः ३।४०
एभिः सर्वमिदं
जगत् ७।१३
एवं यास्यसि पाण्डव ४।३५
एवं यो वेत्ति तत्त्वतः ४।९
एवंरूपः शक्य
अहं नृलोके ११।४८
एवं सततयुक्ता ये १२।१
एवं ज्ञात्वा
कृतं कर्म ४।१५
एवं ज्ञात्वा
विमोक्ष्यसे ४।३२
एवं त्रयीधर्म-
मनुप्रपन्ना ९।२१
एवमुक्तो हृषीकेशः १।२४
एवमुक्त्वा ततो राजन् ११।९
एवमुक्त्वार्जुनः
सङ्ख्ये १।४७
एवमुक्त्वा हृषीकेशम् २।९
एवमेतद्यथात्थ त्वम् ११।३
एवं परम्पराप्राप्तम् ४।२
एवं प्रवर्तितं चक्रम् ३।१६
एवं बहुविधा यज्ञाः ४।३२
एवं बुद्धेः परं
बुद्ध्वा ३।४३
एष तूद्देशतः
प्रोक्तः १०।४०

एष वोऽस्त्विष्ट-
कामधुक् ३।१०
एषा तेऽभिहिता
सांख्ये २।३९
एषा ब्राह्मी स्थिति:
पार्थ २।७२

ऐ

ऐरावतं गजेन्द्राणाम् १०।२७
ऐश्वरं पुरुषोत्तम ११।३

ओ

ॐ तत्सदिति
निर्देश: १७।२३
ओमित्येकाक्षरं ब्रह्म ८।१३

क

कं घातयति हन्ति
कम् २।२१
कच्चिदज्ञानसम्मोह: १८।७२
कच्चिदेतच्छ्रुतं पार्थ १८।७२
कच्चिन्नोभयविभ्रष्ट: ६।३८
कट्वम्ललवणात्युष्ण- १७।९
कथं विद्यामहं
योगिन् १०।१७
कथं स पुरुष: पार्थ २।२१
कथं न ज्ञेयमस्माभि: १।३९
कथमेतद्विजानीयाम् ४।४
कथं भीष्ममहं सङ्ख्ये २।४
कथयन्तश्च मां नित्यम् १०।९
कथयिष्यन्ति
तेऽव्ययाम् २।३४
करणं कर्म कर्तेति १८।१८
करणं च
पृथग्विधम् १८।१४
करिष्यस्यवशोऽपि
तत् १८।६०
करिष्ये वचनं तव १८।७३
कर्णं तथान्यानपि
योधवीरान् ११।३४
कर्तव्यानीति मे पार्थ १८।६
कर्ता तामस
उच्यते १८।२८
कर्ता सात्त्विक
उच्यते १८।२६
कर्ताहमिति मन्यते ३।२७
कर्तुं नेच्छसि
यन्मोहात् १८।६०
कर्तुं मद्योगमाश्रित: १२।११
कर्तुं व्यवसिता वयम् १।४५
कर्म कर्तुमिहार्हसि १६। २४
कर्म कारणमुच्यते ६।३
कर्म चैव
तदर्थीयम् १७।२७
कर्मजं बुद्धियुक्ता हि २।५१
कर्मजान्विद्धि
तान्सर्वान् ४।३२
कर्म ज्यायो ह्यकर्मण: ३।८
कर्मण: सुकृतस्याहु: १४।१६
कर्मणामशम:
स्पृहा १४।१२
कर्मणैव हि
संसिद्धिम् ३।२०
कर्मणो नोपपद्यते १८।७
कर्मणो ह्यपि
बोद्धव्यम् ४।१७
कर्मण्यकर्म य:
पश्येत् ४।१८
कर्मण्यभिप्रवृत्तोऽपि ४।२०
कर्मण्येवाधिकारस्ते २।४७
कर्म प्रारभते नर: १८।१५
कर्म प्राहुर्मनीषिण: १८।३
कर्मबन्धं प्रहास्यसि २।३९
कर्म ब्रह्मोद्भवं
विद्धि ३।१५
कर्मभिर्न स बध्यते ४।१४
कर्मयोगेन चापरे १३।२४
कर्मयोगेन योगिनाम् ३।३
कर्मयोगो विशिष्यते ५।२
कर्मसङ्गिषु जायते १४।१५
कर्मसङ्गेन देहिनम् १४।७
कर्माणि
प्रविभक्तानि १८।४१
कर्मानुबन्धीनि
मनुष्यलोके १५।२
कर्मिभ्यश्चाधिको
योगी ६।४६
कर्मेन्द्रियाणि संयम्य ३।६
कर्मेन्द्रियै: कर्मयोगम् ३।७
कर्शयन्त: शरीरस्थम् १७।६

कल्पक्षये पुनस्तानि ९ । ७
कल्पादौ विसृजाम्यहम् ९ । ७
कवयोऽप्यत्र मोहिता: ४ । १६
कविं पुराणमनु-
शासितारम् ८ । ९
कवीनामुशना कवि: १० । ३७
कश्चिदर्थव्यपाश्रय: ३ । १८
कश्चिद्यतति सिद्धये ७ । ३
कश्चिन्मां वेत्ति
तत्त्वत: ७ । ३
कश्चिन्मे प्रियकृत्तम: १८ । ६९
कस्माच्च ते न नमेरन्
महात्मन् ११ । ३७
काङ्क्षन्त: कर्मणां
सिद्धिम् ४ । १२
कां गतिं कृष्ण
गच्छति ६ । ३७
का प्रीति:
स्याज्जनार्दन १ । ३६
कामं क्रोधं च
संश्रिता: १६ । १८
कामं क्रोधं
परिग्रहम् १८ । ५३
काम एष क्रोध एष: ३ । ३७
कामक्रोधपरायणा: १६ । १२
कामक्रोधवियुक्तानाम् ५ । २६
काम: क्रोधस्तथा
लोभ: १६ । २१
कामक्रोधोद्भवं
वेगम् ५ । २३
काममाश्रित्य
दुष्पूरम् १६ । १०
कामरागबलान्विता: १७ । ५
कामरागविवर्जितम् ७ । ११
कामरूपं दुरासदम् ३ । ४३
कामरूपेण कौन्तेय ३ । ३९
कामसङ्कल्पवर्जिता: ४ । १९
कामात्क्रोधोऽ-
भिजायते २ । ६२
कामात्मान:
स्वर्गपरा: २ । ४३
कामैस्तैस्तैर्हृतज्ञाना: ७ । २०
कामोपभोगपरमा: १६ । ११
कामोऽस्मि
भरतर्षभ ७ । ११
काम्यानां कर्मणां
न्यासम् १८ । २
कायक्लेशभयात्त्यजेत् १८ । ८
कायेन मनसा
बुद्ध्या ५ । ११
कारणं गुणसङ्गोऽस्य १३ । २१
कारणानि निबोध
मे १८ । १३
कार्पण्यदोषो-
पहतस्वभाव: २ । ७
कार्यकरणकर्तृत्वे १३ । २०
कार्यं कर्म करोति य: ६ । १
कार्यं कर्म समाचर ३ । १९
कार्यं चाकार्यमेव
च १८ । ३१
कार्यते ह्यवश: कर्म ३ । ५
कार्यमित्येव यत्कर्म १८ । ९
कार्याकार्यव्यवस्थितौ १६ । २४
कार्याकार्ये
भयाभये १८ । ३०
कार्ये सक्तमहैतुकम् १८ । २२
काल:
कलयतामहम् १० । ३०
कालेनात्मनि
विन्दति ४ । ३८
कालोऽस्मि लोकक्षयकृत्
प्रवृद्ध: ११ । ३२
काशिराजश्च वीर्यवान् १ । ५
काश्यश्च परमेष्वास: १ । १७
किं कर्म किमकर्मेति ४ । १६
किं कर्म पुरुषोत्तम ८ । १
किञ्चिदस्ति धनंजय ७ । ७
किं ज्ञातेन तवार्जुन १० । ४२
किं तद् ब्रह्म
किमध्यात्मम् ८ । १
किं नो राज्येन
गोविन्द १ । ३२
किमकुर्वत सञ्जय १ । १
किमन्यत्कामहैतुकम् १६ । ८
किमाचार: कथं
चैतान् १४ । २१
किमासीत व्रजेत
किम् २ । ५४
किं पुनर्ब्राह्मणा:
पुण्या: ९ । ३३

किं भोगैर्जीवितेन वा १।३२
किरीटिनं गदिनं
चक्रहस्तम् ११।४६
किरीटिनं गदिनं
चक्रिणं च ११।१७
कीर्तिः श्रीर्वाक्च
नारीणाम् १०।३४
कुतस्त्वा कश्मलमिदम् २।२
कुतोऽन्यः कुरुसत्तम ४।३१
कुन्तीपुत्रो युधिष्ठिरः १।१६
कुरु कर्मैव
तस्मात्त्वम् ४।१५
कुरुवृद्धः पितामहः १।१२
कुर्याद्विद्वांस्तथासक्तः ३।२५
कुलक्षयकृतं
दोषम् १।३८, ३९
कुलक्षये प्रणश्यन्ति १।४०
कुलघ्नानां कुलस्य च १।४२
कुलधर्माश्च शाश्वताः १।४३
कुलधर्माः सनातनाः १।४०
कुले भवति धीमताम् ६।४२
कुर्वन्नपि न लिप्यते ५।७
कुर्वन्नाप्नोति
किल्बिषम् ४।२१, १८।४७
कुर्वन्सिद्धि-
मवाप्स्यसि १२।१०
कुर्वाणो मद्व्य-
पाश्रयः १८।५६
कुशले नानुषज्जते १८।१०
कूटस्थमचलं ध्रुवम् १२।३
कूटस्थोऽक्षर
उच्यते १५।१६
कूटस्थो विजितेन्द्रियः ६।८
कूर्मोऽङ्गानीव सर्वशः २।५८
कृतकृत्यश्च भारत १५।२०
कृताञ्जलिरभाषत ११।१४
कृताञ्जलिर्वेपमानः
किरीटी ११।३५
कृत्वापि न निबध्यते ४।२२
कृत्स्नं लोकमिमं
रविः १३।३३
कृत्स्नवित्र
विचालयेत् ३।२९
कृपणाः फलहेतवः २।४९
कृपया परयाविष्टः १।२८
कृपश्च समितिञ्जयः १।८
कृषिगौरक्ष्य-
वाणिज्यम् १८।४४
केचिदात्मान-
मात्मना १३।२४
केचिद्भीताः प्राञ्जलयो
गृणन्ति ११।२१
केचिद्विलग्ना
दशनान्तरेषु ११।२७
केवलैरिन्द्रियैरपि ५।११
केशवार्जुनयोः
पुण्यम् १८।७६
केषु केषु च भावेषु १०।१७
कैर्मया सह
योद्धव्यम् १।२२
कैर्लिङ्गैस्त्री-
न्गुणानेतान् १४।२१
कोऽन्योऽस्ति सदृशो
मया १६।१५
कौन्तेय प्रतिजानीहि ९।३१
कौमारं यौवनं जरा २।१३
क्रियते तदिह
प्रोक्तम् १७।१८
क्रियते बहुलायासम् १८।२४
क्रियन्ते मोक्ष-
काङ्क्षिभिः १७।२५
क्रियमाणानि
सर्वशः १३।२९
क्रियाविशेषबहुलाम् २।४३
क्रोधः पारुष्यमेव च १६।४
क्रोधाद्भवति
सम्मोहः २।६३
क्लेशोऽधिकतरस्तेषाम् १२।५
क्लैब्यं मा स्म
गमः पार्थ २।३
क्षत्रियस्य न विद्यते २।३१
क्षमा सत्यं दमः शमः १०।४
क्षयाय जगतोऽहिताः १६।९
क्षरश्चाक्षर एव च १५।१६
क्षरः सर्वाणि भूतानि १५।१६
क्षात्रं कर्म
स्वभावजम् १८।४३
क्षान्तिरार्जवमेव च १८।४२
क्षिपाम्य-
जस्रमशुभान् १६।१९

क्षिप्रं हि मानुषे लोके ४।१२
क्षिप्रं भवति धर्मात्मा ९।३१
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ९।२१
क्षुद्रं हृदयदौर्बल्यम् २।३
क्षेत्रक्षेत्रज्ञयोरेवम् १३।३४
क्षेत्रक्षेत्रज्ञयोर्ज्ञानम् १३।२
क्षेत्रक्षेत्रज्ञसंयोगात् १३।२६
क्षेत्रं क्षेत्री तथा कृत्स्नम् १३।३३
क्षेत्रज्ञ इति तद्विदः १३।१
क्षेत्रज्ञं चापि मां विद्धि १३।२
क्षेत्रमित्यभिधीयते १३।१

**ख**

खं मनो बुद्धिरेव च ७।४

**ग**

गच्छन्त्यपुनरावृत्तिम् ५।१७
गच्छन्त्यमूढाः पदमव्ययं तत् १५।५
गतसङ्गस्य मुक्तस्य ४।२३
गतागतं कामकामा लभन्ते ९।२१
गतासूनगतासूंश्च २।११
गतिर्भर्ता प्रभुः साक्षी ९।१८
गन्धर्वयक्षासुरसिद्धसङ्घाः ११।२२
गन्धर्वाणां चित्ररथः १०।२६
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ११।३७
गहना कर्मणो गतिः ४।१७
गाण्डीवं स्रंसते हस्तात् १।३०
गामाविश्य च भूतानि १५।१३
गायत्री छन्दसामहम् १०।३५
गिरामस्म्येकमक्षरम् १०।२५
गुडाकेशः परन्तप २।९
गुडाकेशेन भारत १।२४
गुणकर्मविभागयोः ३।२८
गुणकर्मविभागशः ४।१३
गुणतस्त्रिविधं शृणु १८।२९
गुणप्रवृद्धा विषयप्रवालाः १५।२
गुणाः गुणेषु वर्तन्ते ३।२८
गुणातीतः स उच्यते १४।२५
गुणानेतानतीत्य त्रीन् १४।२०
गुणाः प्रकृतिसम्भवाः १४।५
गुणा वर्तन्त इत्येव १४।२३
गुणेभ्यश्च परं वेत्ति १४।१९
गुणैः कर्माणि सर्वशः ३।२७
गुणैर्यो न विचाल्यते १४।२३
गुरुणापि विचाल्यते ६।२२
गुरूनहत्वा हि महानुभावान् २।५
गुह्यमध्यात्मसञ्ज्ञितम् ११।१
गुह्याद् गुह्यतरं मया १८।६३
गृहीत्वैतानि संयाति १५।८
ग्रसिष्णु प्रभविष्णु च १३।१६
ग्लानिर्भवति भारत ४।७

**घ**

घ्नतोऽपि मधुसूदन १।३५

**च**

चक्षुश्चैवान्तरे भ्रुवोः ५।२७
चञ्चलं हि मनः कृष्ण ६।३४
चञ्चलत्वात्स्थितिं स्थिराम् ६।३३
चतुर्विधा भजन्ते माम् ७।१६
चत्वारो मनवस्तथा १०।६
चातुर्वर्ण्यं मया सृष्टम् ४।१३
चिकीर्षुर्लोकसङ्ग्रहम् ३।२५
चिन्तामपरिमेयां च १६।११
चिन्त्योऽसि भगवन्मया १०।१७
चेतसा नान्यगामिना ८।८
चेतसा सर्वकर्माणि १८।५७

चैलाजिनकुशोत्तरम् ६।११
छ
छन्दांसि यस्य पर्णानि १५।१
छन्दोभिर्विविधैः
पृथक् १३।४
छित्त्वैनं संशयं
योगम् ४।४२
छिन्नद्वैधा यतात्मानः ५।२५
छिन्नाभ्रमिव नश्यति ६।३८
छेत्ता न ह्युपपद्यते ६।३९
छेत्तुमर्हस्यशेषतः ६।३९
ज
जगतः शाश्वते मते ८।२६
जगत्प्रहृष्यत्यनुरज्यते
च ११।३६
जगदव्यक्तमूर्तिना ९।४
जगदाहुरनीश्वरम् १६।८
जगद्भासयतेऽ-
खिलम् १५।१२
जगद्विपरिवर्तते ९।१०
जघन्यगुणवृत्तिस्थाः १४।१८
जना न विदुरासुराः १६।७
जनानां पुण्यकर्मणाम् ७।२८
जनाः सुकृतिनोऽर्जुन ७।१६
जन्म कर्म च मे
दिव्यम् ४।९
जन्मकर्मफलप्रदाम् २।४३
जन्मबन्धविनिर्मुक्ताः २।५१
जन्ममृत्युजरादुःखैः १४।२०
जन्ममृत्युजराव्याधि- १३।८
जन्मानि तव चार्जुन ४।५
जयोऽस्मि
व्यवसायोऽस्मि १०।३६
जरामरणमोक्षाय ७।२९
जहि शत्रुं महाबाहो ३।४३
जाग्रतो नैव चार्जुन ६।१६
जातस्य हि ध्रुवो
मृत्युः २।२७
जातु कर्मण्यतन्द्रितः ३।२३
जातु तिष्ठत्यकर्मकृत् ३।५
जानाति पुरुषोत्तमम् १५।१९
जायते वर्णसङ्करः १।४१
जिज्ञासुरपि योगस्य ६।४४
जितात्मनः प्रशान्तस्य ६।७
जितात्मा विगत-
स्पृहः १८।४९
जित्वा वा भोक्ष्यसे
महीम् २।३७
जित्वा शत्रून् भुङ्क्ष्व
राज्यं समृद्धम् ११।३३
जीवनं सर्वभूतेषु ७।९
जीवभूतः सनातनः १५।७
जीवभूतां महाबाहो ७।५
जुह्वति ज्ञानदीपिते ४।२७
जोषयेत्सर्वकर्माणि ३।२६
ज्ञातव्यमवशिष्यते ७।२
ज्ञातुं द्रष्टुं
च तत्त्वेन ११।५४
ज्ञात्वा भूतादि-
मव्ययम् ९।१३
ज्ञात्वा मां
शान्तिमृच्छति ५।२९
ज्ञात्वा शास्त्र-
विधानोक्तम् १६।२४
ज्ञानं यदा तदा
विद्यात् १४।११
ज्ञानं लब्ध्वा परां
शान्तिम् ४।३९
ज्ञानं विज्ञान-
मास्तिक्यम् १८।४२
ज्ञानं विज्ञान-
सहितम् ९।१
ज्ञानं कर्म च
कर्ता च १८।१९
ज्ञानं ज्ञानवतामहम् १०।३८
ज्ञानं ज्ञेयं
ज्ञानगम्यम् १३।१७
ज्ञानं ज्ञेयं परिज्ञाता १८।१८
ज्ञानदीपेन भास्वता १०।११
ज्ञाननिर्धूतकल्मषाः ५।१७
ज्ञानं तेऽहं सविज्ञानम् ७।२
ज्ञानमावृत्य तु तमः १४।९
ज्ञानमावृत्य देहिनम् ३।४०
ज्ञानयज्ञः परन्तप ४।३३
ज्ञानयज्ञेन चाप्यन्ये ९।१५
ज्ञानयज्ञेन तेनाहम् १८।७०
ज्ञानयोगव्यवस्थितिः १६।१

ज्ञानयोगेन साङ्ख्यानाम् ३।३
ज्ञानवान्मां प्रपद्यते ७।१९
ज्ञानविज्ञानतृप्तात्मा ६।८
ज्ञानविज्ञाननाशनम् ३।४१
ज्ञानसङ्गेन चानघ १४।६
ज्ञानसञ्छिन्नसंशयम् ४।४१
ज्ञानाग्निदग्धकर्माणम् ४।१९
ज्ञानाग्निः सर्वकर्माणि ४।३७
ज्ञानाद्ध्यानं
विशिष्यते १२।१२
ज्ञानानां ज्ञानमुत्तमम् १४।१
ज्ञानावस्थितचेतसः ४।२३
ज्ञानिनस्तत्त्वदर्शिनः ४।३४
ज्ञानिनो नित्यवैरिणा ३।३९
ज्ञानिभ्योऽपि
मतोऽधिकः ६।४६
ज्ञानी च भरतर्षभ ७।१६
ज्ञानी त्वात्मैव मे
मतम् ७।१८
ज्ञानेन तु तदज्ञानम् ५।१६
ज्ञाने परिसमाप्यते ४।३३
ज्ञेयं यत्तत्प्रवक्ष्यामि १३।१२
ज्ञेयं चोक्तं
समासतः १३।१८
ज्ञेयः स नित्यसन्न्यासी ५।३
ज्ञेयोऽसि नियतात्मभिः ८।२
ज्यायसी चेत्कर्मणस्ते ३।१
ज्योतिषां रवि-
रंशुमान् १०।२१
ज्योतिषामपि
तज्ज्योतिः १३।१७

**झ**

झषाणां मकरश्चास्मि १०।३१

**त**

तं यज्ञं विद्धि
राजसम् १७।१२
तं विद्याद्
दुःखसंयोग- ६।२३
तं तं नियममास्थाय ७।२०
तं तथा कृपयाविष्टम् २।१
तं तमेवैति कौन्तेय ८।६
त इमेऽवस्थिता युद्धे १।३३
तच्च संस्मृत्य
संस्मृत्य १८।७७
तज्ज्ञानं विद्धि
राजसम् १८।२१
तज्ज्ञानं विद्धि
सात्त्विकम् १८।२०
तत एव च
विस्तारम् १३।३०
ततः कुरु यतात्मवान्
१२।११
ततः पदं तत्परिमार्गि-
तव्यम् १५।४
ततः शङ्खाश्च भेर्यश्च १।१३
ततः श्वेतैर्हयैर्युक्ते १।१४
ततस्ततो नियम्यैतत् ६।२६
ततः स्वधर्मं कीर्तिं च २।३३
ततः स
विस्मयाविष्टः ११।१४
ततो दुःखतरं नु किम् २।३६
ततो भवति भारत १४।३
ततो मां तत्त्वतो
ज्ञात्वा १८।५५
ततो याति परां
गतिम् ६।४५,
१३।२८, १६।२२
ततो युद्धाय युज्यस्व २।३८
ततो यान्त्यधमां
गतिम् १६।२०
ततो वक्ष्यामि ते
हितम् १८।६४
तत्किं कर्मणि घोरे
माम् ३।१
तत्कुरुष्व मदर्पणम् ९।२७
तत्क्षामये त्वामहम-
प्रमेयम् ११।४२
तत्क्षेत्रं यच्च
यादृक् च १३।३
तत्तत्प्राप्य
शुभाशुभम् १२।५७
तत्तदेवावगच्छ
त्वम् १०।४१
तत्तदेवेतरो जनः ३।२१
तत्तामसमुदाहृतम् १७।१९,
२२; १८।२२, ३९
तत्ते कर्म प्रवक्ष्यामि ४।१६

तत्तेजो विद्धि-
मामकम् १५।१२
तत्ते पदं सङ्ग्रहेण
प्रवक्ष्ये ८।११
तत्परः संयतेन्द्रियः ४।३९
तत्प्रसादात्परां
शान्तिम् १८।६२
तत्र का परिदेवना २।२८
तत्र चान्द्रमसं ज्योतिः ८।२५
तत्र तं बुद्धिसंयोगम् ६।४३
तत्र प्रयाता गच्छन्ति ८।२४
तत्र श्रीर्विजयो भूतिः १८।७८
तत्र सत्त्वं
निर्मलत्वात् १४।६
तत्रापश्यत्स्थिता-
न्पार्थः १।२६
तत्रैकस्थं
जगत्कृत्स्नम् ११।१३
तत्रैकाग्रं मनः कृत्वा ६।१२
तत्रैवं सति कर्तारम् १८।१६
तत्रैवाव्यक्तसञ्ज्ञके ८।१८
तत्त्वज्ञानार्थदर्शनम् १३।११
तत्त्वमिच्छामि
वेदितुम् १८।१
तत्त्ववित्तु महाबाहो ३।२८
तत्त्वेनातश्च्यवन्ति ते ९।२४
तत्समासेन मे शृणु १३।३
तत्सुखं राजसं
स्मृतम् १८।३८

तत्सुखं सात्त्विकं
प्रोक्तम् १८।३७
तत्स्वयं योगसंसिद्धः ४।३८
तथा तवामी नर-
लोकवीराः ११।२८
तथा तेनेदमावृतम् ३।३८
तथात्मा नोपलिप्यते १३।३२
तथा देहान्तरप्राप्तिः २।१३
तथान्तर्ज्योतिरेव यः ५।२४
तथापि त्वं महाबाहो २।२६
तथाप्नोति निबोध
मे १८।५०
तथा प्रलीनस्तमसि १४।१५
तथा मानापमानयोः ६।७;
१२।१८
तथा शरीराणि विहाय
जीर्णानि २।२२
तथा सर्वाणि भूतानि ९।६
तथैव च पितामहाः १।३४
तथैव नाशाय विशन्ति
लोकाः ११।२९
तदर्थं कर्म कौन्तेय ३।९
तदस्य हरति प्रज्ञाम् २।६७
तदहं भक्त्युपहृतम् ९।२६
तदा गन्तासि निर्वेदम् २।५२
तदात्मानं सृजाम्यहम् ४।७
तदा योगमवाप्स्यसि २।५३
तदित्यनभिसन्धाय १७।२५
तदेकं वद निश्चित्य ३।२

तदेव मे दर्शय
देवरूपम् ११।४५
तदेव मे रूपमिदं
प्रपश्य ११।४९
तदोत्तमविदां
लोकान् १४।१४
तद्दानं राजसं
स्मृतम् १७।२१
तद्दानं सात्त्विकं
स्मृतम् १७।२०
तद्धाम परमं मम ८।२१;
१५।६
तद्बुद्धयस्तदात्मानः ५।१७
तद्भवत्यल्पमेधसाम् ७।२३
तद्योगैरपि गम्यते ५।५
तद्राजसमुदाहृतम् १८।२४
तद्वत्कामा यं प्रविशन्ति
सर्वे २।७०
तद्विद्धि प्रणिपातेन ४।३४
तद्विद्धि भरतर्षभ १३।२६
तन्निबध्नाति कौन्तेय १४।७
तन्निबध्नाति भारत १४।८
तन्निष्ठास्तत्परायणाः ५।१७
तन्मे क्षेमतरं भवेत् १।४६
तन्मे ब्रूहि सुनिश्चितम् ५।१
तपश्चास्मि तपस्विषु ७।९
तपस्तत्त्रिविधं नरैः १७।१७
तपस्तप्तं कृतं
च यत् १७।२८

तपस्विभ्योऽधिको योगी ६।४६
तपाम्यहमहं वर्षम् ९।१९
तपो दम्भेन चैव यत् १७।१८
तपो दानं यशोऽयशः १०।५
तपो मानसमुच्यते १७।१६
तप्यन्ते ये तपो जनाः १७।५
तमसः परमुच्यते १३।१७
तमस्त्वज्ञानजं विद्धि १४।८
तमस्येतानि जायन्ते १४।१३
तमः सत्त्वं रजस्तथा १४।१०
तमाहुः पण्डितं बुधाः ४।१९
तमाहुः परमां गतिम् ८।२१
तमुवाच हृषीकेशः २।१०
तमेव चाद्यं पुरुषं प्रपद्ये १५।४
तमेव शरणं गच्छ १८।६२
तमोद्वारैस्त्रिभिर्नरः १६।२२
तयापहृतचेतसाम् २।४४
तयोर्न वशमागच्छेत् ३।३४
तयोस्तु कर्मसन्न्यासात् ५।२
तव शिष्येण धीमता १।३
तव सौम्यं जनार्दन ११।५१
तवापि वक्त्राणि समृद्धवेगाः ११।२९
तस्माच्छास्त्रं प्रमाणं ते १६।२४
तस्मात्त्वमिन्द्रियाण्यादौ ३।४१
तस्मात्त्वमुत्तिष्ठ यशो लभस्व ११।३३
तस्मात्प्रणम्य प्रणिधाय कायम् ११।४४
तस्मात्सर्वगतं ब्रह्म ३।१५
तस्मात्सर्वाणि भूतानि २।३०
तस्मात्सर्वेषु कालेषु ८।७, २७
तस्मादज्ञानसम्भूतम् ४।४२
तस्मादपरिहार्येऽर्थे २।२७
तस्मादसक्तः सततम् ३।१९
तस्मादुत्तिष्ठ कौन्तेय २।३७
तस्मादेतत्त्रयं त्यजेत् १६।२१
तस्मादेवं विदित्वैनम् २।२५
तस्मादोमित्युदाहृत्य १७।२४
तस्माद् ब्रह्मणि ते स्थिताः ५।१९
तस्माद्यस्य महाबाहो २।६८
तस्माद्युध्यस्व भारत २।१८
तस्माद्योगाय युज्यस्व २।५०
तस्माद्योगी भवार्जुन ६।४६
तस्मान्नार्हा वयं हन्तुम् १।३७
तस्मिन् गर्भं दधाम्यहम् १४।३
तस्य कर्तारमपि माम् ४।१३
तस्य कार्यं न विद्यते ३।१७
तस्य तस्याचलां श्रद्धाम् ७।२१
तस्य प्रज्ञा प्रतिष्ठिता २।५७, ५८, ६१, ६८
तस्य सञ्जनयन्हर्षम् १।१२
तस्यां जागर्ति संयमी २।६९
तस्याराधनमीहते ७।२२
तस्याहं सुलभः पार्थ ८।१४
तस्याहं न प्रणश्यामि ६।३०
तस्याहं निग्रहं मन्ये ६।३४
तांस्तथैव भजाम्यहम् ४।११
तांस्तितिक्षस्व भारत २।१४
तानकृत्स्नविदो मन्दान्३।२९
तानहं द्विषतः क्रूरान् १६।१९
तानि सर्वाणि संयम्य २।६१
तान्निबोध द्विजोत्तम १।७
तान्यहं वेद सर्वाणि ४।५
तान्विद्ध्यासुर-निश्चयान् १७।६
तान्समीक्ष्य स कौन्तेयः १।२७

तामसं परिचक्षते १७।१३
तामसः परिकीर्तितः १८।७
तामसी चेति तां शृणु १७।२
तामेव विदधाम्यहम् ७।२१
तावान्सर्वेषु वेदेषु २।४६
तासां ब्रह्म महद्योनिः १४।४
तिष्ठन्तं परमेश्वरम् १३।२७
तीक्ष्णरूक्षविदाहिनः १७।९
तुमुलो व्यनुनादयन् १।१९
तुल्यनिन्दात्म-
संस्तुतिः १४।२४
तुल्यनिन्दास्तुति-
मौनी १२।१९
तुल्यप्रियाप्रियो धीरः १४।२४
तुल्यो मित्रारिपक्षयोः १४।२५
तुष्यन्ति च रमन्ति च १०।९
तृष्णासङ्गसमुद्भवम् १४।७
तेजः क्षमा धृतिः
शौचम् १६।३
तेजश्चास्मि विभावसौ ७।९
तेजस्तेजस्विनामहम् ७।१०,
१०।३६
तेजोभिरापूर्य
जगत्समग्रम् ११।३०
तेजोमयं विश्वमनन्त-
माद्यम् ११।४७
तेजोराशिं सर्वतो
दीप्तिमन्तम् ११।१७
ते तं भुक्त्वा स्वर्गलोकं
विशालम् ९।२१
ते देवा भावयन्तु वः ३।११
ते द्वन्द्वमोहनिर्मुक्ता: ७।२८
तेन मुह्यन्ति जन्तवः ५।१५
तेनैव रूपेण
चतुर्भुजेन ११।४६
तेऽपि चातितरन्त्येव १३।२५
तेऽपि मामेव कौन्तेय ९।२३
तेऽपि यान्ति
परां गतिम् ९।३२
ते पुण्यमासाद्य
सुरेन्द्रलोकम् ९।२०
ते प्राप्नुवन्ति
मामेव १२।४
ते ब्रह्म तद्विदुः
कृत्स्नम् ७।२९
ते मे युक्ततमा मताः १२।२
तेऽवस्थिताः प्रमुखे
धार्तराष्ट्राः २।६
ते विदुर्युक्तचेतसः ७।३०
तेषां सततयुक्तानाम् १०।१०
तेषां के योगवित्तमाः १२।१
तेषां ज्ञानी नित्ययुक्तः ७।१७
तेषां नित्या-
भियुक्तानाम् ९।२२
तेषां निष्ठा तु का
कृष्ण १७।१
तेषामहं समुद्धर्ता १२।७
तेषामादित्यवज्ज्ञानम् ५।१६
तेषामेवानुकम्पार्थम् १०।११
तेषां भेदमिमं शृणु १७।७
तेऽहोरात्रविदो जनाः ८।१७
तैर्दत्तानप्रदायैभ्यः ३।१२
तौ ह्यस्य परिपन्थिनौ ३।३४
त्यक्तसर्वपरिग्रहः ४।२१
त्यक्तुं कर्माण्य-
शेषतः १८।११
त्यक्त्वा
कर्मफलासङ्गम् ४।२०
त्यक्त्वा देहं पुनर्जन्म ४।९
त्यक्त्वा सर्वानशेषतः ६।२४
त्यक्त्वोत्तिष्ठ परन्तप २।३
त्यजत्यन्ते कलेवरम् ८।६
त्यागः शान्तिर-
पैशुनम् १६।२
त्यागस्य च हृषीकेश १८।१
त्यागाच्छान्ति-
रनन्तरम् १२।१२
त्यागी सत्त्व-
समाविष्टः १८।१०
त्यागे भरतसत्तम १८।४
त्यागो हि पुरुषव्याघ्र १८।४
त्याज्यं दोषवदित्येके १८।३
त्रायते महतो भयात् २।४०
त्रिधैव गुणभेदतः १८।१९

त्रिभिर्गुणमयैर्भावैः ७।१३
त्रिविधं कर्मणः
फलम् १८।१२
त्रिविधं नरकस्येदम् १६।२१
त्रिविधः
कर्मसङ्ग्रहः १८।१८
त्रिविधः सम्प्रकीर्तितः १८।४
त्रिविधा कर्मचोदना १८।१८
त्रिविधा भवति
श्रद्धा १७।२
त्रिविधो भवति प्रियः १७।७
त्रिषु लोकेषु किञ्चन ३।२२
त्रीन्गुणानतिवर्तते १४।२१
त्रैगुण्यविषया वेदाः २।४५
त्रैविद्या मां सोमपाः
पूतपापाः ९।२०
त्वक् चैव परिदह्यते १।३०
त्वत्तः कमलपत्राक्ष ११।२
त्वत्प्रसादान्मयाच्युत १८।७३
त्वदन्यः संशयस्यास्य ६।३९
त्वनयोस्तत्त्वदर्शिभिः २।१६
त्वमक्षरं परमं
वेदितव्यम् ११।१८
त्वमक्षरं सदसत्तत्परं
यत् ११।३७
त्वमव्ययः शाश्वत-
धर्मगोप्ता ११।१८
त्वमस्य पूज्यश्च
गुरुर्गरीयान् ११।४३
त्वमस्य विश्वस्य परं
निधानम् ११।१८, ३८
त्वमादिदेवः पुरुषः
पुराणः ११।३८
त्वमादौ प्रोक्तवानिति ४।४
त्वया ततं विश्व-
मनन्तरूप ११।३८
त्वयैकाग्रेण चेतसा १८।७२
त्वां सदा
परिचिन्तयन् १०।१७

द

दंष्ट्राकरालानि च ते
मुखानि ११।२५
दंष्ट्राकरालानि
भयानकानि ११।२७
दण्डो दमयतामस्मि १०।३८
ददामि बुद्धियोगं
तम् १०।१०
दम्भमानमदान्विताः १६।१०
दम्भार्थमपि चैव
यत् १७।१२
दम्भाहङ्कारसंयुक्ताः १७।५
दम्भेनाविधिपूर्वकम् १६।१७
दम्भो दर्पोऽभिमानश्च १६।४
दया भूतेष्वलोलुप्त्वम् १६।२
दर्शयात्मानमव्ययम् ११।४
दर्शयामास पार्थाय ११।९
दातव्यमिति
यद्दानम् १७।२०
दानक्रियाश्च
विविधाः १७।२५
दानं दमश्च यज्ञश्च १६।१
दानमीश्वरभावश्च १८।४३
दानेषु यत्पुण्यफलं
प्रदिष्टम् ८।२८
दास्यन्ते यज्ञभाविताः ३।१२
दिवि देवेषु वा पुनः १८।४०
दिवि सूर्यसहस्रस्य ११।१२
दिव्यगन्धानुलेपनम् ११।११
दिव्यं ददामि ते
चक्षुः ११।८
दिव्यमाल्याम्बर-
धरम् ११।११
दिव्यानेकोद्यतायुधम् ११।१०
दिव्या ह्यात्म-
विभूतयः १०।१६, १९
दिव्यौ शङ्खौ
प्रदध्मतुः १।१४
दिशश्चानवलोकयन् ६।१३
दिशो न जाने न लभे
च शर्म ११।२५
दीप्तानलार्कद्युति-
मप्रमेयम् ११।१७
दीयते च
परिक्लिष्टम् १७।२१
दीयतेऽनुपकारिणे १७।२०
दुःखदोषानुदर्शनम् १३।८
दुःखमाप्तुमयोगतः ५।६

